


## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ० प्र०) भारतम्

| | | |
|---|---|---|
| संपुटः ४ | 15 DECEMBER 1966 | क्रमांकः १२ |
| संपुटः ५ | 15 JANUARY 1967 | क्रमांकः १[illegible] |



मार्गशीर्षपुष्यांकौ] शकवर्षः १८८८ [मूल्यम् ४० पैसाः

# विषयसूची


| | | |
|---|---|---|
| गोजननि ! | | 1 |
| सम्पादकीयम् | | 2 |
| कामधेनुपरिदेवनम् | ... | 6 |
| भारतीयवैभवम् | ... | 10 |
| सम्पादकं प्रति लेखः | ... | 13 |
| सुभाषितानि | .... | 15 |
| लघुकथा | ... | 17 |
| राजाजीकथा – ३१ | ... | 19 |
| संस्कृतभाषापठनेन प्रयोजनम् | ... | 21 |
| भारतीयवाङ्मये निगूढांशाः | ... | 23 |
| पराभवदक्षिणायनपरीक्षासु सर्वप्रथमतया उत्तीर्णाः | | 25 |
| सप्तर्षिरामायणम् | ... | 26 |
| अष्टोत्तरशतदिव्यदेशस्तुतिः | ... | 29 |
| मलयालसद्गुरुसंस्तुतिः | ... | 34 |
| पराभवोत्तरायणपरीक्षाकार्यक्रमः | ... | 35 |
| पराभवोत्तरायणपरीक्षाकालक्रमः | ... | 36 |







# गोजननि !

भारतविनुते गो जननि ! भासुरकरुणे भो जननि !
मधुरदुग्धदायिनि हे जननि
सुधृतसाधुताशीले जननि !
परमपावनशरीरे जननि
परमऋषिगणार्चितपादे हे जननि ॥ ॥ भारत ॥
श्रुतिशतगीतवैभवे जननि !
धृतसकलविश्वभासुरे जननि ।
अमृतायमानदुग्धे जननि !
असमानमानदिग्धे जननि ॥ ॥ भारत ॥
वरवसिष्ठगोष्ठस्थितिसमयक-
वीर्यं ते क्व गतं हे जननि !
परितो हिंसकपापिजनततीः
पर्युपेक्षसे किं जननि ? ॥ ॥ भारत ॥
त्वद्रक्षायै बत ते बहुलाः
तनया मृता धेनुजननि !
किमुपेक्षसे अहो तान्वा
किमुदीक्षसे शुभं समयम् ? ॥ ॥ भारत ॥

# सम्पादकीयम्

## गोवधनिरोधे सर्वकारस्य उदासीनता

माता रुद्राणां दुहिता वसूनां
स्वसाऽऽदित्यानां अमृतस्य नाभिः ।
प्र नु वोचं चिकितुषे जनाय
मा गामनागामदितिं वधिष्ट ॥

धेनोः पवित्रताया विषये भारतीयस्य संशय एव नास्ति । तस्याः मलेन मूत्रेणापि शोधितं अपवित्रं वस्तु पवित्रं सम्भाव्यते भारतीयैः । पाश्चात्यैश्च एतदाचारमूलशोधनाय तन्मलपरीक्षणेन क्रिमिसंहारकशक्तिः तत्र अधिका वर्तते इति अनुभूतम् । तैश्च बाह्यरूपमेव तस्य संशोधितं, आन्तरं तु तच्छोधनातीतं ऋषिप्रवरैरनुभूतं श्लाघितं च ।

दुग्धे विशेषः च प्रपंचजनैस्सर्वैरनुभूयत एव भूयो भूयः । परन्तु इतोऽप्यधिकतरं विशेषं साक्षात्कृत्यैव ऋषयः धेनुं होमसाधनं अरक्षन् स्वाश्रमेषु ।

अस्मत्पूर्वजा धेनूनां संक्षेम एव लोकक्षेमः भवेदिति अमन्यन्त । अत एव ते नित्यं "गोब्राह्मणेभ्यश्शुभमस्तु नित्यं लोकास्समस्तास्सुखिनो भवन्तु" इति प्रार्थयन्त । गोसंरक्षणायैव शिवाजी महाराजः सर्वप्रकारैः अयततेति तच्चरितादवगम्यते । गोहत्या महापातकेषु परिगणिता वर्तते । गोदानेन तुल्यं दानं नास्ति । गोप्रदक्षिणेन भूप्रदक्षिणफलं लभ्यते । अत्र विषये अहल्यागौतमविवाहगाथा स्मर्तव्या । अपि च गोहत्यापातकविषये आन्ध्रदेशीया गोदावर्यवतरणकथा अनुसंधेया ।

आन्ध्रदेशे गोदावरीतीरे कोवूरु (गोपूः) नामकः कश्चन ग्रामोऽद्य विद्यते । सः पूर्वं गौतमस्य महर्षेराश्रम आसीत । तदा काले द्वादशवर्षपरिमितः अनावृष्टिकः क्षामस्समजनि । जनाश्च अन्नाभावात् यत्र कुत्रापि गच्छन्ति स्म । ऋषयोपि

स्वाश्रमेषु आहारालाभात् देशान्तरं प्रवजन्ति स्म । तदा गौतमस्तु स्वाश्रमे एव स्थित्वा अतिथीन् पोषयन्नास्त । सः स्वतपसा आश्रमे कञ्चन केदारमकल्पयत् । सः केदारः प्रतिदिनं शालीः फलति स्म । स गौतमः ताः आलूय पक्त्वा अतिथीनर्चयति स्म । एतं विषयं ज्ञात्वा सर्वेपि ऋषयः तत्रैव समवेता आसन् । तथापि गौतमः अनिरुत्साहः तान् अनुदानेन सेवमान एवासीत् । तेन च तस्य कीर्तिः प्रावर्धत । तदसहमानाः केचन ऋषयः स्वतपसा काञ्चन गां सृष्ट्वा तत्सस्य-भक्षणाय प्रैरयन् । तत् दृष्ट्वा च गौतमः तां क्षेत्रतोपसारयितुं तृणेन सधूत्कार-मस्पृशत् । तावन्मात्रेणैव स कपटधेनुः भूमौ पतित्वा अम्रियत । गौतमस्तु गोहत्या-जनितदुःखः ईश्वरमाराध्य तज्जटातः गङ्गामानीय गोः कलेबरं आसिच्य पूतोऽभवत् । तदानीतत्वात् तस्या नद्याः गौतमीति नाम प्रसिद्धमभवत् । एतादृश्याः गोः चरित्रेण संबद्धत्वात् स च ग्रामः कोवूरु नाम्ना व्यवह्रियते ।

कपटधेनोः ताडनेनैव गौतमेन ऋषिणा एतादृशं महापापमात्मनि उद्भावित-मिति चेत्किमु वक्तव्यं बुद्धिपूर्वकं तद्वधे द्रव्यसंपादने तन्मांसभक्षणे वा ।

कर्ता कारयिता चैव प्रेरकश्चानुमोदकः ।
सुकृते दुष्कृते चैव चत्वारस्समभागिनः ॥ इत्युक्तदिशा न केवलं तद्धतका एव पापिनो भवन्ति, किन्तु तदनुमोदिनोपि तत्सदृशा एव भवन्ति । विशेषतः शक्तस्सन् उपेक्षमाणः तादृशो भवेदेव ।

भारतशासने गोसंरक्षणमुद्दिष्टमपि सर्वकारः उपेक्षते प्रादेशिकसर्वकार-निर्वर्तनीयं तत्कर्म इत्यपलपति च । धिक् सर्वकारस्य स्थाने औदासीन्यमस्थाने संरम्भं च ।

मद्यनिषेधविषये च महान् आग्रहस्सर्वकारस्य गोवधनिषेधे च अन्धता बधिरता मूकता जडता चेति महत् दौर्भाग्यम् । अपरमिदमाश्चर्यं विफलमपि मद्यनिषेधमनुवर्तयन्ति महत् धनं व्यययन्ति वैफल्यमंगीकृत्यापि भारतदेशादर्शत्वेन तदनुपालनं समर्थयन्ति अधिकारिणः । त एव गोवधनिषेधं भारतदेशादर्शत्वेन नांगीकुर्वन्ति । मन्ये गोवधार्थमेव स्वराज्यं सम्पादितं भारतप्रजाभिरिति तेषां भाव इति ।

एकतः भारते गोवधः अन्यतः क्षीराभावविषयकः हाहाकारः, क्षीरचूर्णस्य अमेरिकातः स्वीकारः। गोमांसेन क्षीरचूर्णस्य विनिमयः कियन्तं कालं अनुभूयेत। अचिरेणैव गोजातिरेव भारते अदृश्या भवेत्। हृष्टपुष्टानां धेनूनां वृषभाणां च सहस्रशो वधः प्रतिदिनमनुभूयते। एतन्मांसेन च विदेशद्रव्यमार्ज्यते सर्वकारेणेति एतत्स्थगने तद्धनहानिसम्भावनया सर्वकारः पश्चाद्धरति पदमिति वार्ता प्रथते। एषा वार्ता चेत्सत्या इतोऽप्यवमानकरं किं भवेत्?

केचिद्वदन्ति अस्मदीया धेनवः दुर्बलाः अल्पक्षीरदाः अतः तद्धननेऽपि न कापि देशस्य हानिरिति। अयं विचित्रतरो वादः। तासां दुर्बलत्वे बलवर्धनाय यत्नः करणीयः। तासां क्षीराभिवृद्धिर्यथाभवेत्तथा आहारचिकित्साप्रदानादिभिर्यतितव्यम्, न तु तज्जातेरेव नाश आपादनीयः। अस्मत्क्षेत्राणां अल्पधान्यप्रदत्वात् चीनेभ्योमेरिकाभ्यो वा न समर्पयेम तानि। किन्तु तद्दोहदादिकं विज्ञाय यत्नेन अधिकधान्योत्पादनं कुर्याम। न ह्यस्मज्जननीं वृद्धामपि परित्यजेम, किन्तु औषधादिना तां संरक्षेम पूजयेम च।

गावः अहताश्चेत् अल्पेनैव कालेन मनुजानां निवासावकाश एव नश्येदिति केषांचिद्वादवैखरी। एतस्मिन् वादे न हि सारो विद्यते। मनुजसंख्या अधिका आसीदति किं तद्वधः क्रियते। किं तन्मांसं आहारत्वेनोपयुज्यते। न हि वयं राक्षसाः। अपि तु अधिकाहारोत्पादने यत्नाः आधीयन्ते, उत्पत्तिनिरोधप्रयत्नाश्च अनुस्रियन्ते। एवमेव धेनुजातिविषयेऽपि प्रवर्तने उत्तमा जातिः तासां वर्धेत, क्षीरन्यूनता च नश्येत्। गोः प्रायशः विंशतिवर्षात्मकमायुर्भवति। अत्र तु वर्षचतुष्टयं बाल्यमेव भवति। अवशिष्टेषु च वर्षेषु वार्धक्यहेतोः वर्षत्रयं यापनीयं अत्रान्तरे चतुर्दशसु वर्षेषु जीवितानां गवां सामान्यतः षड् वत्सा भवेयुः। तेषु च धेनुवत्सत्रितयमेव सम्भाव्यते। सर्वापि गौः न वत्सषट्कं सूते। न सर्वापि धेनुवत्सं सूते। अतः एषा गणना न सत्या।

पशुगणाभिवृद्ध्यैव क्षेत्रबलाभिवृद्धिर्भवेत्। पशुमलेन पुष्टेषु क्षेत्रेषु फलितानि धान्यशाकादीनि स्वादूनि आरोग्यकराणि च भवन्ति जनानाम्। क्षेत्रं च सबलं बहुकालं सस्यं संवर्धयिष्यति। कृतकक्षारदोहदसिक्ता च भूमिः अचिरेणैव ऊषरीभविष्यति, तज्जानि धान्यादीनि च आस्वादूनि आरोग्यभंजकानि च भवन्ति। अद्यतनकाले आपणमागच्छतां वार्ताकादिशलाटूनां मरीच्यादीनां स्थौल्यदर्शनेपि न पूर्ववत् स्वादुता न सुगुणः वा अनुभूयते। बहुशोनुभवामोत्र नगरे आलकन्दशाकः गमकसेनगन्धतुन्दिलः वमिं जनयति।

यदि पशुमलेन पुष्टाः स्युः क्षुपा लताश्च सहजबला नीरोगा भवेयुः। तदुत्पन्नं च शाकादिकं हितं प्रियं च भवेत्। अतः आहारसमस्यापरिष्कारदृष्ट्यापि गावः बहुलतया पोषयितव्या एव न हन्तव्याः॥

सौरभेय्यस्समेधन्ताम्!





# कामधनु परिदेवनम्

चेरुकूरु जयचन्द्रशास्त्री

मातॄणां किल सर्वासाम् सन्ततेस्सुखदर्शनम् ।
ध्रुवं भवति लोके तु महदानन्दकारणम् ॥ 1

तस्माद्यदृच्छया कामधेनुर्वै भुवमागता ।
सुचिरादात्मसन्तानसुखसंदर्शनोत्सुका ॥ 2

किमिदं दारुणं कर्म पापीयस्समजायत ।
कर्मभूमिरिति ख्याते भारते हि समन्ततः ॥ 3

यस्मिन् हि पूजिता गावो नित्यं परमभक्तितः ।
तस्मिन्नेवादयं हन्त हन्यन्ते कोटिशोधुना ॥ 4

अजराप्यमरा भूत्वा दिवि सौख्यं वसन्त्यपि ।
पश्यन्ती सन्ततिच्छेदं कथं जीवाम्यहं क्षणम् ॥ 5

कं याचे कुत्र गच्छामि? कोवाद्य शरणं मम ।
केनोपायेन वा भूया दस्मत्सन्ततिरक्षणम् ? ॥ 6

इति संचिन्त्य मनसा विलपन्ती मुहुर्मुहुः ।
अम्बारवमिषेणासौ पालकानिदमब्रवीत ॥ 7

"न यूयं भारतीयाः किम् ? न प्रजाहितकारिणः ? ।
किमित्यसांप्रतं कर्म प्रारब्धं भुवि सांप्रतम् ? ॥ 8

"गवामङ्गेषु तिष्ठन्ति सर्वे देवा" इति श्रुतिः ।
नारोहत्किं श्रुतिपथं दौर्भाग्यात् भवतां जनाः ? ॥ 9

यामन्तरा न शक्या हि देवपूजादिकाः क्रियाः ।
तामेव भारते घ्नन्ति धिक् धिक् तान् पुरुषान्बत ॥ 10

मातरस्सर्वभूतानां गावस्सर्व सुखप्रदाः ।
इति पौराणिकी सूक्तिर्नालसैः पठिता किमु! ॥ 11

कृषिप्रधाने देशेस्मिन् गोरक्षा क्रियते यदि ।
जनास्तु सस्यसंपत्त्या रक्षिताम्युरसंशयम् ॥ 12

बाल्यान्मरणपर्यन्तं तदूर्ध्वं चापि सर्वथा ।
उपकुर्वन्ति वो गावः बत ता हन्तुमुद्यताः ॥ 13

एकस्याः पूजया धेनोस्सर्वे देवाः प्रपूजिताः ।
एकस्याः हिंसया धेनोस्सर्वे देवाश्च हिंसिताः ॥ 14

अस्माकं तु रसादेव हृष्टाः पुष्टाश्च मानवाः ।
अस्मानेवोद्यता हन्तुमहो कालविपर्ययः ॥ 15

यत्र मत्सन्ततिस्सौख्यं वर्तते नित्यमङ्गळा ।
तत्र श्रीर्विजयोभूतिरिति जानीत पूरुषाः ॥ 16

गोष्ठं पवित्रं धेनूनाः सवतीर्थेभ्य उच्यते ।
तद्धूलिस्पर्शनादेव पुनीता भारतावनिः ॥ 17

पूर्वं दिलीपराजस्तु नियतं भक्तितत्परः ।
मत्सन्ततिं प्रपूज्याथ सन्ततिं प्राप भूमिपः ॥ 18

युद्धे महति संजाते विश्वामित्रवशिष्ठयोः ।
मत्पुत्री साहतः पूर्वं वसिष्ठो जितवान् किल ॥ 19

न केवलं मनुष्याणां देवानामपि सर्वदा ।
सन्ततिर्मे प्रियतरा वित्तैवं साधु नायकाः ॥ 20

कृष्णावतारे विष्णुर्हि गोगणं पर्यपालयत् ।
सर्वेशस्यापि नन्दीशो वाहनं किल भूमिपाः ॥ 21

अस्माकं तु विना रक्षां साधितं वो कथं भवेत् ।
रामराज्यमिति ब्रूत प्रजापालनतत्पराः ॥ 22

एवमालोच्य विबुधाः दयापीयूषचेतसः ।
कार्यादस्माद्राक्षसात् निवर्तयत मानवान् ॥ " 23

इत्येवं बहुधालाप्य चञ्चलाधरपल्लवा ।
नासापुटे ग्लापयन्ती दीर्घनिश्वासमारुतैः ॥ 24

निरन्तराश्रुसंपूरकर्दमीकृतकाश्यपी ।
शोकामर्षभरानम्र पूर्वग्रीवा तपस्विनी ॥ 25

अनिच्छन्ती महाघोरं द्रष्टुं त्रिदशनन्दिनी ।
दीर्घश्रवोग्रपिहितालोलारुणविलोचना ॥ 26

दुःखविश्लथसर्वाङ्गाण्युद्धर्तुमिव सा मुहुः ।
प्रस्खलत्खुरसंघट्टकंपिताखिलमेदिनी ॥ 27

आत्मसन्तानविच्छेदसन्तापभरमाकुला ।
विधुन्वन्तीव गात्रात्सा जातवेपथुकैतवात् ॥ 28

अम्बारवं पुनः कृत्वा स्पष्टं धेनुर्निजगाद ह ।
प्रशस्यं क्षेमदं पुण्यं सर्वानुष्ठेयमुत्तमम् ॥ 29

अस्माकं प्राणरक्षायै यततां सत्वचेतसाम् ।
कारागारादिबन्धस्तु गर्हणीयो विशेषतः ॥ 30

गैर्वाणी भारती वाणी धेनुर्भारतदैवतम् ।
स्वर्गाधिकं भारतं हि त्रयमेतत्तु रक्ष्यताम् ॥ 31

नायकानुपदिश्यैवं बहुधा शास्त्रसम्मतम् ।
तटित्प्रभेव दीप्तांगी, सुरभिस्तु तिरोदधे ॥ 32



# भारतीय वैभवम

ले. धनकुधरं. वरदाचार्यः, गर्तपुरी - ४.

भारतीयानां अस्माकं बहोः कालात भाव्यमानं बहुमानास्पदं वैभवं बहु-अस्तीति न अविदितं सहृदयैः। पुरुषार्थसामरस्येन लौकिकं अलौकिकं च तत्वं अवगमयितुं भारतीयैः बहुधा सफलः प्रयत्नः संपादितः। भारतस्य अस्य देशस्य "भारतम्" इति बहुभिः कीर्तितं भव्यं नाम। कदाचन प्राचीनकाले प्रजारञ्जन-परायणाः प्रभुप्रख्याः राजानः ऋषितां अवलम्ब्य, राजर्षिप्रतिमाः राजसूयादीन् यागान् कृत्वा, असाधारणं वैभवं आपादयामासुः। राजनीतिं अवलम्ब्य, देशे सामरस्यं संधातुं, ऐकमत्यं च आपादयितुं द्वादशराजमण्डले स्वात्मनः प्रधानतां अवगत्य, राजा राजकीयं, राजसूयं चिकीर्षुः आसीत। कृतराजसूयं राजनं धर्माचार्याः पुरोहिताः आसन्द्यां उपवेश्य - "त्वं भरतोऽसि। सर्वेषां लोकानां राजा। अस्माकं तु ब्राह्मणानां सोमो राजा।" इत्यादिभिः मन्त्रैः राजानं आशीर्भिः आयुज्य, तस्य भरतसंज्ञां आपाद्य भारतीयवैभवस्य स्वरूपं आविश्चक्रुः। तथा "भरत" बिरुदभ्राजिष्णुभिरेव राजभिः, राजर्षिमतिभिः परिपालिता इयं भारतवसुन्धरा। अद्यापि तेभ्यः स्मारयति राजर्षिभिरेव भारतं परिपालितम्। एते भरतनामानो राजानः, राजसूयसम्राट्धर्माः भरतनामसार्थक्यसंपादनायैव तथा तथा परिपालयामासुः यथा अद्यापि न जीर्णतामेति।

लोकात्मसंग्राहकाः श्रेयः - प्रेयः - कृतयत्नाः सर्वथा सर्वदा प्रीतिं व्युत्पत्तिं च संपाद्य संपाद्य, वैभवं उद्घोषयितुं कृतयत्ना अभवन। तथा धर्मकर्मपरायणाः, धर्म-ब्रह्मानुसंधानचतुराः प्रवृत्तिनिवृत्तिसामरस्ये कृतदीक्षाः हितं आधातुं प्रियं च आधातुं सुकृतव्रता आसन्। तैस्सर्वदा एवं नु खलु चिंतितम् – "**पश्येम शरदश्शतम्। जीवेम शरदश्शतम्। नन्दाम शरदश्शतम्। मोदाम शरदश्शतम्। भवाम शरदश्शतम्। शृणुवाम शरदश्शतम्। प्रब्रवाम शरदश्शतम्। अजीताः स्याम शरदश्शतम्।**" अनन्तं कालं अभिव्याप्य, वयं विज्ञानं संपादयेम। संपादितं च विज्ञानं लोकेभ्यः प्रबोधयेम। लोकैस्सर्वैस्संभूय, नन्दमानन्दं

प्राप्नुयाम। यैः शत्रुभिः न कदाचन विदिनाः स्याम। सर्वदाऽपि वयं विजेतारः अस्मदीयं वैभवं दिक्षु विदिक्षु प्रसारयेम। एवं संकल्पेन राष्ट्रं धारयितुं कृतोद्यमा भारतीया इति सर्वैः सम्भाव्यते।

अरण्ये कुलपतीनां आश्रमेषु वृक्षच्छायोपविष्टाः वेदिकानिषण्णाः गुरूणां अन्ते निवासिनः शिष्यान्ते शिष्या अभूवन्, यैः बहुश्रुतैः वेदे तन्त्रे पुराणे शास्त्रे दर्शने लोकतन्त्रे च सुविस्तृता प्रज्ञा समधिगता। केवलं प्रेयसि केन तृप्तम्? तथा श्रेयः लोकान्तरे च केनेष्टं धारितम्? अतः श्रेयः प्रेयः कृतदीक्षैः विद्यार्थिभिः सद्भिः विद्याः समुपार्जिताः।

भूमविद्यायां इदमस्ति — अधीतसर्वविद्यो नारदः कदाचन सनत्कुमारं अधित्य, स्वयं अनधिगतात्मविद्यः इति आत्मविद्यां अधिगमयितुमात्मानं प्रार्थनां अकरोत? सनत्कुमारेण पृष्टम् — त्वया किमधीतम्? इति। नारदेनोक्तम्—ऋग्वेद, यजुर्वेद, सामवेद, अथर्वविद्यां, सर्पविद्यां, देवयजनविद्यां, नक्षत्रविद्यां, पित्र्यं, वाको वाक्य, राशिं, सर्वं अहं वेद्मि इति। सनत्कुमारेण सर्वं श्रुत्वा नामैवैतत इत्युक्तम्। किं नाम्नो भूयसि? नारदस्य जिज्ञासा। अस्ति नाम्नो भूमा इत्युपक्रम्य, भूमविद्यां उपदिदेश सनत्कुमारः। एवं नामादि भूमान्तं विज्ञायैव विद्याविदः आसन् प्राचीना इति सर्वमनोहरं भारतीयवैभवम्।

कुलपतीनां आश्रमेषु स्त्रीभिरपि ब्रह्मचर्यं उषित्वा विद्याः समधीताः। तदात्वे स्त्रीणां विद्याव्यवस्था द्विधा आसीत्। एका विद्यावती ब्रह्मचारिणी ब्रह्मवादिनी सर्वविद्या अधीत्य, अधीतिबोधाचरणप्रचारणदक्षा आसीत। अन्या गृहिणीपदप्रतिष्ठाकामनया अधीतविद्या सद्यो वधूः पुरन्ध्री गौरवभाजनं च आसीत। एवं स्त्रीभिरपि वैभवं अनुरुध्य चेष्टितम्।

चतुष्षष्टिकलातन्त्रं भारतीयवैभवत्वेन सर्वत्र प्रख्यातम्। तदिदं सर्वं चतुर्दशविद्यासु गूढतया अवस्थितं अर्वाचीनकाले स्पष्टतया विद्योदितम्। कुलपति-प्रांगणे समधीतविद्याः बहुश्रुताः ग्रामनगरादीनागत्य, स्वविद्याविवेकज्ञानादिकं सर्वत्र प्रजासु प्रबोध्य, वैभवपताकां प्रसारयामासुः। अग्रहारेष्ववस्थिताः महान्तः पण्डिताः ज्ञानविज्ञानशृङ्खलां अभिसंरक्षयितुं कृतदीक्षा अभूवन्, भौतिके दैविके

आकस्मिके प्रत्यवघाते संपन्ने विप्लुते संघर्षणात्मके समये ग्राम्यधर्मप्रवृत्तान् आपत्समयधर्मानुयायिनः, तात्कालिकधर्मानुष्ठानकुशलान् जनान् समुद्धर्तुं ज्ञान-विज्ञानशृङ्खलां च अविच्छिन्नं प्रसारयितुं अधीतिबोधाचरणसमर्थानामेव पण्डितानां अधिकारः आसीत् । तदात्वे, प्रजासामरस्यसंधानाय कृतबुद्धयः राजानं सर्वत्र देवायतनानि प्रतिष्ठाप्य, विद्याः सर्वाः प्रबोधयामासुः । देवायतनप्रांगणे विद्या वैद्यादिसौकर्यं, शस्त्रशास्त्रपरिज्ञानं लोकालोकविवेचनं संपादयितु च महान्तं अवकाशं प्रददुः । स्वकीयं विज्ञानं बोधयितुं बहुश्रुतानामेव उद्यमः आसीत् । वैद्यविद्यानिपुणाः केचन, मणिमन्त्रौषधिपरिज्ञानेन सर्वं लोकं नीरोगमरोगं कर्तुं समुद्यताः । आत्मयोगे निष्णाताः कतिपये खण्डान्तरेषु च योगनिष्ठां प्रतिष्ठापयामासुः । अद्यत्वेऽपि विश्वस्मिन् विश्वे पर्यटतां संस्कृतिप्रतीकपरिशीलन-परायणानां पदे भारतीयवैभवं परोक्षमप्यध्यक्षं साक्षाद्भूय प्रकाशते । सर्वत्र च अद्यतने प्रपंचे सर्वेष्वपि प्रदेशेषु धर्मतेजो विलसितं द्योतयितुं सन्निवेशाः बहवः प्रकाश्यन्ते ॥



# सम्पदकं प्रति लेखः

## स्नातकोत्सवेषु प्राच्यभाषाबिरुदभाजां प्रवेशोऽस्तु

लेखकः – समुद्राल लक्ष्मणः,

**आर्य,**

श्रीवेङ्कटेश्वरविश्वविद्यालयस्य दशमः स्नातकोत्सवः जनवरिमासे (१९६७) २१ तिथौ प्रचलिष्यतीति, तत्र प्रवेशमभिलषद्भिरभ्यर्थिभिः डिशम्बरमासे २१ तिथेः प्रागेव अभ्यर्थनापत्राणि प्रेषणीयानीति च तद्विश्वविद्यालयाधिकारिभिः प्रकटितम् ।

विश्वविद्यालयोन्नतपरीक्षासु उत्तीर्णेभ्यः स्नातकोत्सवसमये प्रमाणपत्राणि दीयन्ते इति संप्रदायसिद्ध एवायमाचारः । श्रीवेङ्कटेश्वरविश्वविद्यालयस्थापनानन्तरं प्रथमद्वितीयपट्टप्रदानोत्सवयोः बि. ए. इत्यादि डिग्रीपरीक्षासु उत्तीर्णानामभ्यर्थिनां यथा, तथैव संस्कृतान्ध्रादिभाषासम्बन्धिनीषु "शिरोमणिः" "विद्वान्" इत्यादिषु टैटिल्परीक्षासु उत्तीर्णानामपि अभ्यर्थिनां प्रवेशः पर्यकल्पि । परन्तु तदनन्तरं प्रवृत्तेषु स्नातकोत्सवेषु तदानीन्तनैः विश्वविद्यालयाधिपतिभिः टैटिल्-समुत्तीर्णानां अभ्यर्थिनां प्रवेशो निराकृतः । तत्र किं वा कारणमिति न ज्ञायते । तच्च निराकरणमधुनाऽपि श्रीवेङ्कटेश्वराविद्यालये प्रवर्तते इति नितरां शोचनीय-मेतत् ।

अयं च निरोधः सुपरीक्षितोऽपि न खलु समर्थनीयतां प्रतिपद्यते । तथाहि । बहुषु विषयेषु प्राच्यभाषाबिरुदभाजः बि. ए. प्रमुखडिग्रीभाजश्च समामेव प्रतिपत्तिं वहन्ति । तद्यथा :–

(१) डिग्रीपरीक्षा इव टैटिल् परीक्षा अपि विश्वविद्यालयेन निर्णीतां पाठ्य-प्रणालिकामेवानुसृत्य प्रवर्तन्ते ।

(२) सेकण्डरीविद्यासमाप्त्यनन्तरं बि. ए. डिग्रीं लब्धुं यथा वा वत्सरचतुष्टयं कलाशालायां पठनीयं, तथैव शिरोमण्यादिबिरुदप्राप्त्यर्थमपि ।

(३) डिग्रीभाजामुपाध्यायानामिव टैटिलभाजामपि पण्डितोपाध्यायानां वेतनादिषु अभिन्ना प्रतिपत्तिः सर्वकारेणानुमन्यते ।

(४) पट्टप्रदनियोजकवर्गे टैटिलपरीक्षासु उत्तीर्णानामपि अनुमोदनप्रदानाय (वोटिंग्) अवकाशो वर्तते ।

(५) विशिष्य टैटिलपरीक्षान्तःपाती शिरोमणिबिरुदः एम्. ए. डिग्रीतुल्य इति श्रीवेङ्कटेश्वरविश्वविद्यालयेनापि अङ्गीकृतमास्ते ।

एवं डिग्रीधारिभिः सह अनेकेष्वंशेषु समां प्रतिपत्तिं वहतां प्राच्यभाषाबिरुदभाजां स्नातकोत्सवे परं प्रवेशो निराक्रियते इति नावगम्यते किमत्रौचित्यमिति। आन्ध्रविश्वविद्यालयस्नातकोत्सवे तु प्राच्यभाषाबिरुदभाजां विषये एतादृशो निरोधो नास्तीत्यपि अत्र स्मरणीयं भवति। एकस्मिन्नेव राष्ट्रे एकेन विश्वविद्यालयेन अनुष्ठीयमानः सदाचारः नान्येनानुष्ठीयते इतीदं वैचित्र्यमेवोद्भावयति ।

अस्त्येतत् यत् नियतवस्त्रधारणाभावे पट्टप्रदानोत्सवेषु प्रवेशो नानुमन्यते इति । तथा च यस्तावत् टैटिलपरीक्षोत्तीर्णः नियतवस्त्रधारणं विना स्नातकोत्सवप्रवेशमभिलषति, तस्यैव बहिष्करणमुचितम् । अथवा स्वदेशसंस्कृतेर्यदनुगुणं तादृशवस्त्रनियमस्य विधानं युज्यते। किन्तु विना समुचितं कारणं सर्वेषामपि प्राच्यभाषाबिरुदभाजां तत्र प्रवेशो नास्तीति कथनं न खलु समुचितं प्रतिभाति । स्वतन्त्रभारते स्वदेशभाषाणामितोऽधिकः प्रोत्साहः आवश्यकः। अपि च स्वदेशसंस्कृतेः समुद्धरणमेव लक्ष्यीकृत्य भगवतः श्रीवेङ्कटेश्वरस्य नाम्ना स्थापितो विश्वविद्यालयो विषयेऽस्मिन् इतरसंस्थानां मार्गदर्शी भवेत् ।

ततश्च इदानीन्तनाः श्री. वे. वि. विद्यालयाधिकारिणः कृपयाऽत्र निर्दिष्टान् विषयान्साकल्येन परिशील्य जनवरिमासे भविष्यति स्नातकोत्सवे प्राच्यभाषाबिरुदभाजामपि प्रवेशमंगीकुर्वन्तु इति सविनयं प्रार्थये ।



# सुभाषितानि

श्री यन्० रामनाथार्यः

( पूर्वानुबन्धः )

निमित्तमुद्दिश्य हि यः प्रकुप्यति ध्रुवं स तस्यापगमे प्रसीदति।
अकारणद्वेषि मनस्तु यस्य वै कथं जनस्तं परितोषयिष्यति ॥

One who is angry due to a particular reason, becomes calm after the cause is removed. But a person who is angry for no reason whatsoever, how is it possible to appease him

हीनसेवा न कर्तव्या कर्तव्यो महदाश्रयः ।
पयोपि शौंड़िनीहस्ते वारुणीत्यभिधीयते ॥ ॥ २१९ ॥

No one should serve under mean persons but should depend upon great men. Even milk in the hands of a woman selling liquor, is considered to be (mistaken for) liquor.

कविः करोति पद्यानि लालयत्युत्तमो जनः ।
तरुः प्रसूते पुष्पाणि मरुद्वहति सौरभम् ॥ ॥ २२० ॥

A poet merely composes verses but it is really relished by persons of high learning. The tree produces flowers but it is the wind that enjoys (wafts) its fragrance.

शिरसा धार्यमाणोऽपि सोमस्सोमेन शम्भुना ।
तथापि कृशतां याति कष्टः खलु पराश्रयः ॥ ॥ २२१ ॥

Even though the moon is borne on their heads (ie.) though held in high esteem) by Lord Siva and his consort, he wanes, indeed it is miserable to depend on others.

कस्य दोषः कुले नास्ति व्याधिना को न पीडितः ।
व्यसनं केन न प्राप्तं कस्य सौख्यं निरन्तरम् ॥ ॥ २२२ ॥

Is there a family of anyone without any reproach, is there a person who had never suffered from ill health, is there one who had never suffered from misfortunes, and one who had enjoyed happiness through out his life.

दिनमेकं शशी पूर्णः क्षीणस्तु बहुवासरान् ।
सुखःदुःखं सुराणामप्यधिकं का कथा नृणाम् ॥ ॥ २२३ ॥

The moon is full only on one day and is decreasing on many days; this shows that the period of suffering is longer than happiness even for the Devas; what about the fate of ordinary men.

( संतोषम् )

## लघुकथा ५

# प्रतीपगामिनां आनुकूल्यम्

**महाकवि० पैत्तवाडि० व० रामानुजाचार्यः**

उद्यानगृहवासी परमशिवः कश्चित् लोकचित्रस्वभावः मनुष्यः इति वक्तव्यम् । तदर्थं केचित् विषयाः उदाह्रियन्ते । पश्यन्तु तावत् । स प्रतिदिनं दैनिकसंचिका साप्ताहिका वा सर्वा अपि अन्तिमपृष्ठादारभ्य पठन् प्रथमपृष्ठे संपूरयेत् । वयं स्नानानन्तरं खलु भोजनादिकर्माणि कुर्याम । स तु न तथा । भोजनमारभ्य स्नानान्तकर्माणि करोति । भोजनेऽपि प्रथमतः तक्रान्नं अन्ते सूपाद्यन्नं । तथैव मध्याह्ने अस्माकं प्रथमतः भक्ष्यादि ततः तीर्थादि । अस्य तु तीर्थाद्यनन्तरं भक्ष्यादि । अनेन सर्वमपि प्रातिलोम्येन क्रियते । यदि केनचित् किमिति प्रातिलोम्येन अचर्यते भवद्भिः इति पृष्टः "मनुष्यास्सर्वेऽपि यदि समानाः तत्र को विशेषः । व्यत्यास आवश्यकः" इति दृढं वदति । वयं प्रातः उत्थानसमये पूर्वेद्युर्दिनप्रकाशनपत्रं परिहरामः । स तु पूर्वेद्यूरात्रावेव शयनसमये तद्दिनपत्रं परिहराति । वीथीः परिक्रम्य गृहागमनानन्तरमेव पादरक्षां स्वीकरोति सः । किञ्च स्वनामांकितदारुफलकां स्वोद्यानपूर्वभागे अस्थपयित्वा पृष्ठभागे अस्थापयत् । स्वोद्यानरक्षकभटं सायमेव तद्गृहं संप्रेष्य परेद्युः प्रातः आगमयति ।

कदाचित् तस्य पत्नीपुत्रपुत्र्यादयस्सर्वे आवश्यककार्यार्थं ग्रामान्तरं गताः । तदा अयमेक एव गृहे अतिष्ठत् । यथा तथा वा भवतु सः । यदि निद्रितः तदा स कुंभकर्ण-सोदर एव । यदि भूकम्पोजातो नोत्तिष्ठेत् सः । शयनगृह एव धनभूषणादीनां निक्षेप-पेटिकाऽपि निक्षिप्ताऽभूत् । तदा अस्य निद्रासमये एकश्चोरः तदुद्यानभित्तिकादी-नतिलंघ्य तच्छयनगृहभित्तिकायां सुरंगं कृत्वा तच्छिरोभागे उद्घाटनसाधनायः

पुञ्जवलयं अन्विष्य अलाभात् शिर एव पार्श्वतस्संवेश्यापि तदलाभतः भित्यादिषु सर्वत्र परिमृग्यापि अयस्साधनं एकमपि यावन्न लेभे तावत् क्वचित्स्थितः घटिकायन्त्रः "टङ टङ" इति पञ्चघण्टा अताडयत् । तत् श्रुत्वा चोरः इतःपरमवकाशो नास्तीति स्ववशस्थायस्ससाधनैः उद्घाटयितुं अर्धघण्टं श्रमतः कृतप्रयत्नोपि अशक्तः इतःपरं अत्र यदि स्थितोऽहं कारागृहमेव लभेयं इति भीतः अलब्धधनादिलेशः अरुणोदयात्पूर्वमेव बहिरधावदभाग्यशाली । तदा तद्धस्ते यदि लब्ध उद्घाटनसाधनयन्त्रवलयः दशसहस्राधिकरूप्यकाणि तदधिकमितभूषणादिद्रव्याणि च चोरगृहीतानि भवेयुः । ततस्स परमशिवः प्रभाते उद्बुध्य उत्थाय शयनगृहात् बहिर्गत्वा उद्घाटितं कवाटादिकं वीक्ष्य चोरागमनं विदित्वा नितान्तखिन्नः सत्वरं अन्तःप्रविश्य स्वशयनीयपादस्थले पूर्वनिक्षिप्तं वलयजातं तथैवस्थितं वस्तुजातं च दृष्ट्वा तुष्टोऽभूत् । सर्वैः शिरोभागे निक्षेप्तव्यवलयजातं अनेन पादभागे निक्षिप्तत्वात् सर्वं न चोरितम् । एतद्व्यत्यासं चोरो न ज्ञायते स्म ।



# राजाजीकथा ३१



## कदलीमाता

लेखकः — आ० वरदराजन्

कदाचित् कश्चित् चिक्रोडः (उडुत - आन्ध्र्यां) कस्मिंश्चित् कदली-वृक्षे आहर्तुं क्रिमिकीटकादीन् अन्विष्यन् खेलति स्म ।

“क्व ते माता” इति कदली तमपृच्छत् ।

“न मे माता” इति चिक्रोडः समाहितवान् । स्वयं कुक्षिम्भरिः स चिक्रोडः स्वमातरं व्यस्मार्षीत् । जनयित्रीं मातृमूर्तिं कथंकारं व्यस्कार्षीः ? राम राम !! पश्य मेऽपत्यानि । मा मनपहाय, मदीयमेव मूलमाश्रित्य मत्सकाशे कियन्नवनवोन्मेषेण वर्धमाना वर्तन्ते । किमिति त्वयाप्येवं न भाव्यते” इति कदली तं उद्घोषयामास ।

अहो ! कुतः प्रज्ञावादान् भाषसे ? का माता ? कः पुत्रः ? सर्वं खलु मिथ्या । प्रतीक्षस्व तावत्, कतिपयदिवसैः तव पुत्रः कश्चित् जनिष्यते । स तव प्राणानामन्तको भविष्यति इति भविष्यं ज्यौतिषफलमाह स चिक्रोडः ।

तदारभ्य कदली चिन्ताग्रस्ता । कतिपयदिनेष्वतीतेषु -

कदली कोरकिता फल-गुच्छं प्रसुषुवे । फलानि प्रवृद्धानि पक्वानि च आसन् । कार्तवीयार्जुनस्य करालीं करावलिं ज्ञापयतीव स गुच्छः फलपंक्तिभिः समुच्चितः ।

सुतस्य वृद्धिं ऋद्धिं च पश्यन्त्याः कदली-मातुः आनन्दः इयत्ता-मतिचक्राम ।

एवं सति एकदा स चिक्रोडः कदलीं प्राप्य कुशलप्रश्नमकरोत् ।

"पश्य ! भोः ! महाशय ! पश्य !! एषोऽस्ति विलसन् मम सुतः तदीयं रूपं लावण्यं, कियच्छोभमानं महीयते । को वा लोपः मदीय-योग क्षेमयोः" इति झटिति समाहितवती ससंभ्रमं कदली ।

अथ कतिपयदिवसैः –

अम्मम्मा ! स पापिष्ठः चिक्रोडः यदाह तदवितथमिति भाति । अनेन कुमारकंठीरवेण मम कटिः त्रुटयत इव; जीवितमेव वा पूर्णविरामं एष्यतीव । उदरे महान् कुक्षोभ इव विवर्तते । अस्तु वा कामं ! एतादृशे पुत्ररत्ने जाते मम किं वाऽस्ति इतोऽपि अभीप्सितं पूरणीयम् ? मातृभावः सफलो मयि जातः, इति चिन्तयन्ती कदलीमाता क्रमेण अवनताऽवनिं गता ।

वनपालः आगत्य प्रवृद्धं परिपक्वं च फलगुच्छं विच्छिद्य गृहीत्वा जगाम । तदनु कतिपयदिनैः म्लानां दीनां कदलीमपि निश्शेषं चिच्छेद वनपालः ।

"माता कामयते सुतस्य सुखदं वृद्धिपदं जीवितम्"



# संस्कृतभाषापठनेन प्रयोजनम्

## ले. के. शिवरामरेड्डि

संस्कृतभाषापठनेन = संस्कृतभाषाध्ययनेन

प्रयोजनं = फलं अत्यधिकं वर्तते इति अर्थः

**अस्य वाक्यस्य** – संस्कृतभाषापठनेन एव मनुष्याणां अत्यधिकं पुण्यं, पापनाशः, व्यवहारज्ञानं, ज्ञानाभिवृद्धिः सुगतयः च संपद्यन्ते इति भावः।

लोके बहवः भाषाः सन्ति। तासु मध्ये संस्कृतभाषा एका एव श्रेष्ठा राजते। इतरभाषापठनेन ज्ञानं नश्यति। उदाहरणाय आंग्लभाषापठनेन अधिकसंख्याकाः प्राचीनधर्मान् परित्यज्य सत्यमार्गात् च्युताः भवन्ति। संस्कृतभाषा देवभाषा इत्युच्यते। संस्कृतभाषा एव समस्तभाषाणां आधारः भवति। संस्कृतभाषायां पदजालं अतीव वर्तते। अन्यभाषासु तथा न भवति। पूर्वस्मिन् काले राजभाषास्थाने संस्कृतभाषा आसीत्। तदानीन्तनकाले संस्कृतभाषायां अतीव निपुणाः कवयः पंडिताश्च आसन्। संस्कृतभाषायां अत्यधिकाः ग्रन्थाः सन्ति। संस्कृतभाषा अधुना क्षीणदशायां भवति। संस्कृतभाषायां कामन्दकीयादीनि-शास्त्राणि चतुर्वेदाः, उपनिषदादयः सन्ति। अपि च वेदव्यासविरचितं संस्कृतमहाभारतं तर्क - अर्थवेदान्तादयः संस्कृतभाषायां सन्ति।

समस्तलोकभाषाणां संस्कृतभाषा एव जीवितं भवति। संस्कृतभाषापठनेन अस्माकं अनेकानि प्रयोजनानि वर्तन्ते। संस्कृतभाषाभिवृद्ध्यर्थं प्रयतन्ते केचन महानुभवाः। संस्कृतभाषां पठितुं आंग्लेयाः अतीव प्रयत्नं कृत्वा संस्कृते ज्ञानिन आसन्। महापुरुषैः ऋषिभिः प्रणीतैः विषयैः सहिताः ताळपत्रग्रन्थाः तदानीन्तनकाले भारतदेशे अधिकाः आसन्। तेषु संस्कृतभाषा एव लिखिता आसीत्। यदा कालक्रमेण म्लेच्छाः, भारतदेशोपरि आक्रमणं अकुर्वन् तदा ते भारतीयानां ऐश्वर्यं स्वीकृत्य अगच्छन्। क्रमेण आंग्लेयाः आगत्य भारतदेशं आक्रम्य परिपालनादिकं चक्रिरे। तदा ते अन्विष्य संस्कृतग्रन्थान् सर्वान् स्वीकृत्य गतवन्तः आसन्।

तेषु ग्रन्थेषु युद्धाचरणरीतयः, विज्ञानशास्त्राभिवृद्धिः आयुधसामग्रीणां निर्माणरीतयः च आसन्। तान् पठित्वा ते क्रमेण विज्ञानशास्त्रविषये अभिवृद्धिं प्राप्य अत्युन्नत-स्थितिं प्राप्नुवन्। ततः एव ते चन्द्रमंडलगमनं, अणुशक्तिनिर्माणं आचरन्ति। प्रपञ्चाभिवृद्धिविषये अपि समर्थाः भवन्ति। संस्कृतपठनेनैव ते तादृशसमर्थाः आसन्। अस्मिन् देशेऽपि संस्कृतभाषापठनेन माणवकस्य भोजनादिकं विद्यार्थिवेतनं च लभ्यते पठनकाले। अहो संस्कृतभाषामाहात्म्यं संस्कृतभाषा पठनेन मानवः मोक्षं प्राप्य सर्वदा दुःखहीनः सन् सुखं अवाप्नोति। संस्कृतभाषायां वैद्य, तर्क, मीमांसाशास्त्रादयः अनेके विषया भवन्ति। तत्पठनेनैव मानवः समस्तकार्यफलानि प्राप्नोति सुखेन जीवति। अपि च यदा वयं सर्वे संस्कृतपाठकाः भवेम तदा अस्मासु वैरभावं न भवेत्। यदा संस्कृतपठनात् शांति, समैक्यता, परस्परानुरागं, सुहृद्भावाः च लभ्यन्ते तदा अस्माकं भारतदेशः समस्तकार्यरङ्गेषु पुरोगमनं कुर्यात्। तदा देशे सर्वत्र सस्यसमृद्धिः धर्माचरणादिकं च भवेताम्। समस्त-देशानां मध्ये अस्माकं भारतदेश एव प्रथमस्थानं अवाप्य इतरदेशीयानां मार्गदर्शकः भवेत्। एवं संस्कृतभाषापठनेन प्रयोजनानि अनेकानि भवन्ति।

"संस्कृतं हि जीवितं सर्वलोकभाषिणां।
संस्कृते श्वबोधकं भारते निवासिनाम्॥"

"संस्कृतं सनातनं प्राच्यतत्त्वधारकम्।
संस्कृतं चिरन्तनं भक्ति मुक्तिसाधकम्॥"

"तस्मात्संस्कृत - साहित्यगूढ - ज्ञानस्य साधकम्।
स्वराज्यसाफल्यकरं संस्कृतं सेव्यतां जनैः॥"

इति संस्कृताभ्युदयगीतायां प्रोक्तम्।



# भारतीयवाङ्मये निगूढा अंशाः

ले. पिडपर्ति शेषाचलशास्त्री
पोडगट्टलपल्ली

## भगवद्गीतायां पुरुषोत्तमप्राप्तियोगः

ऊर्ध्वमूलमधश्शाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥

वैज्ञानिकार्थः — ऊर्ध्वमूलं = ऊर्ध्वभागे स्थापितं, अधश्शाखं=अधोभागे शाखायुक्तं, अश्वत्थं = झटिति व्यापनशीलं अश्ववेगसहितं, चिरकालस्थित्ययोग्यं वा विद्युदाशयं, अव्ययं = विकाररहितं, प्राहुः = वदन्ति । छन्दांसि = प्रजानामभिलाषाः, यस्य = वैद्युतस्थानस्य, पार्णानि = पात्राणि भवन्ति, तं = विद्युदाश्रयं, यः वेदः सः, वेदवित् = वेदवेत्ता ।

तात्पर्यम् – अश्ववेगयुक्तत्वात् शीघ्रव्यापित्वात् चिरानवस्थितिशीलत्वाच्च वैद्युताग्निरेव अश्वत्थेन निरूपितः । अयमग्निः ऊर्ध्वभागे निहितः । अस्य शाखाश्च अधःप्रसरन्ति । अयमविकृतः प्रजानामभिलाषानुगुणं आचेष्टते । एतद्रहस्यज्ञ एव वेदज्ञः भवति ॥

राजकीयार्थः – ऊर्ध्वमूलं = दूरे प्रधानस्थानशालिनं, अधश्शाखं = ततः विविधविभागयुक्तं, अव्ययं = धनाभावरहितं विकाररहितं च राजभोगं, अश्वत्थं = अश्वत्थतुल्यं, अश्वजातिपुरुषयुक्तं च, प्राहुः = वदन्ति । यस्य वृक्षस्य, पर्णानि = पत्राणि, छन्दांसि = प्रजाभावाः एव भवन्ति, तं यो वेद स वेदवित् ।

तात्पर्यम् – राज्यस्य दूरे मुख्यस्थानं भवति । ततः परिपालनविभागाः सर्वत्र प्रसरन्ति । अस्य धनलोपः कदापि न भवति । अत्र उत्तमाः पुरुषाः

निर्वाहं कुर्वन्ति । इदं अश्वत्थवत् भवति । प्रजानां अभिलाषा एव अस्य पत्राणि भवन्ति । एतस्य ज्ञानमेव वेदपरिज्ञानं भवति ॥

अधश्चोर्ध्वं प्रसुता यस्य शाखाः गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके ॥

वैज्ञानिकार्थः – गुणप्रवृद्धाः = तन्तु (तन्त्री)भिः सुदीर्घाः, विषयप्रवालाः = गोचरप्रदेशेषु जनपदेषु वा प्रकृष्टतया वलिताः, तस्य = अश्वत्थवैद्युताग्नेः, शाखाः, अधः = अधोभागे, ऊर्ध्वं च उपरिभागे च, प्रसृताः = व्याप्ताः, मनुष्यलोके = भूलोके, कर्मानुबन्धीनि = बहुलक्रियासंबन्धीनि, मूलानि = बन्धनानि मुख्यस्थानानि वा, अधश्च=अधोभागात्, अनुसन्ततानि = विस्तृतानि ॥

तात्पर्यम् – वैद्युताग्नेः शाखाः तन्त्रीभिः यथेच्छं तत्र तत्र नीताः अधोभुवि आकाशे च व्याप्ता वर्तन्ते । भुवि च गृहादिषु यन्त्रालयेषु च वैद्युतबन्धनानि विस्तार्यन्ते ॥

राजकीयार्थः -- गुणप्रवृद्धाः = अमुख्यैरुद्योगिभिः विस्तृताः, विषयप्रवालाः = जनपदरूपपल्लवयुक्ताः, तस्य शाखाः=पालनविभागाः, अधः ऊर्ध्वं च प्रसृताः=सर्वत्र व्याप्ताः, मनुष्यलोके=भूलोके, कर्मानुबन्धीनि विविधकार्यसम्बन्धीनि मूलानि = प्रधानस्थानानि,अनुसन्ततानि = अन्योन्यानुगुणं विस्तृतानि ॥

तात्पर्यम् – प्रधानाधीनैः औद्योगिकपुरुषैः परीताः जनपदरूपपल्लवशालिनः पालनविभागाः सर्वतः प्रस्तुता वर्तन्ते । अस्मिन् लोके कर्तव्यभेदेन भिन्नानि मुख्यस्थानानि सुविस्तृतानि भवन्ति ॥



## पराभव - दक्षिणायनपरीक्षासु सर्वप्रथमतया उत्तीर्णः



परिचयः

**श्री सुब्बु, मदुरै**



अभिज्ञा

**श्रीमती अलिमेलु वैद्यनाथम्**

**नंगनल्लूरु —**



विचक्षणा

**श्री ये. पि. श्यामला**

**क्रोंपेटै**

# सप्तर्षिरामायणम्

## ले० नारायणमूर्तिः



### १. बालकाण्डः

कश्यप उवाच –

जातः श्रीरघुनायको दशरथान्मुन्याश्रयात्ताटकां
हत्वा रक्षितकौशिकक्रतुवरः कृत्वाप्यहल्यां शुभाम् ।
भङ्क्त्वा रुद्रशरासनं जनकजां पाणौ गृहीत्वा ततो
जित्वार्धाध्वनि भार्गवं पुनरगात् सीतासमेतः पुरीम् ॥

### २. अयोध्याकाण्डः

अत्रिरुवाच –

दास्या मन्थरया दयारहितया दुर्बोधिता कैकयी
श्रीरामप्रथमाभिषेकसमये मातापययाचद्वरौ ।
भर्तारं भरतः प्रशास्तु धरणीं रामो वनं गच्छता-
दित्याकर्ण्य स चोत्तरं न हि ददौ दुःखेन मूर्छां गतः ॥

### ३. अरण्यकाण्डः

भरद्वाज उवाच –

श्रीरामः पितृशासनाद्वनमगात् सौमित्रिसीतान्वितो
गङ्गां प्राप्य जटां निबध्य सगुहः सच्चित्रकूटे वसन् ।
कृत्वा तत्र पितृक्रियां सभरतो दत्वाऽभयं दण्डके
प्राप्यागस्त्यमुनीश्वरं तदुदितं धृत्वा धनुश्चाक्षयम् ॥

## ४. किष्किन्धाकाण्डः

**विश्वामित्र उवाच –**

गत्वा पञ्चवटीमगस्त्यवचनाद्दत्वाऽभयं मौनिनां
भित्वा शूर्पणखास्यकर्णयुगलं त्रातुं समस्तान् मुनीन् ।
हत्वा तं च खरं सुवर्णहरिणं भित्वा तथा वालिनं
तारारत्नमथारिराज्यमकरोत् सर्वं च सुग्रीवसात् ॥

## ५. सुन्दरकाण्डः

**गौतम उवाच –**

दूतो दाशरथेः सलीलमुदधिं तीर्त्वा हनूमान् महान्
दृष्ट्वाऽशोकवने स्थितां जनकजां दत्वाऽङ्गुलेर्मुद्रिकाम् ।
अक्षादीनसुरान्निहत्य महतीं लङ्कां च दग्ध्वा पुनः
श्रीरामं च समेत्य देव! जननी दृष्टा मयेत्यब्रवीत् ॥

## ६. युद्धकाण्डः

**जमदग्निरुवाच –**

रामो बद्धपयोनिधिः कपिवरैर्वीरैर्नलाद्यैर्वृतो
लङ्कां प्राप्य सकुम्भकर्णतनुजं हत्वा रणे रावणम् ।
तस्यां न्यस्य विभीषणं पुनरसौ सीतापतिः पुष्पका-
रूढः सन् पुरमागतः सभरतः सिंहासनस्थो बभौ ॥

## ७. उत्तरकाण्डः

**वसिष्ठ उवाच –**

श्रीरामो हयमेधमुख्यमखकृत सम्यक् प्रजाः पालयन्
कृत्वा राज्यमथानुजैश्च सुचिरं भूरिस्वधर्मान्वितौ ।
पुत्रौ भ्रातृसमन्वितौ कुशलवौ संस्थाप्य भूमण्डले
सोऽयोध्यापुरवासिभिश्च सरयूस्नातः प्रपेदे दिवम् ॥

## ८. फलश्रुतिः

सर्वे ऋषय ऊचुः —

श्रीरामस्य कथासुधाऽतिमधुरान् श्लोकानिमानुत्तमान्
ये शृण्वन्ति पठन्ति च प्रतिदिनं तेऽघौघविध्वंसिनः ।
श्रीमन्तो बहुपुत्रपौत्रसहिता भुक्त्वेह भोगांश्चिरं
भोगान्ते तु सदार्चितं सुरगणैर्विष्णोर्लभन्ते पदम् ॥





# अष्टोत्तरशतदिव्यदशस्तुतिः

श्री कांची प्र. भ. अण्णङ्गराचार्यस्वामिकृता

( सटिप्पणीका )

( पूर्वानुबन्धः )

### ५. तिरुच्चित्तारुदिव्यदेशः

तिरुच्चित्ताराख्ये शठरिपुमुनीन्द्रस्तुतिपदे
स्थितं दिव्ये देशे जलजनिलयाकान्तमनघम् ।
गजध्वंसे दक्षं क्षणनिहतमल्लं व्रजमणिं
हरिं कंसारातिं सततमुपसेवस्व हृदय ॥

### ६. तिरुवण्वण्डूरुदिव्यदेशः

तिरुवण्वण्डूरभिधे शठकोपमुनीन्द्रदृत्यवाग्विषये ।
दिव्ये देशे विलसन् रामो भगवान् ममापि हृदि वसति ॥

### ७. तिरुवारन्विळैदिव्यदेशः

मणिमण्डपवप्रततीविलसत्तिरुवारविळाभिधदेशपतिम् ।
वकुलाभरणाभिधसूरिकृतिश्रवणोत्सुकमानसमीशमगाम् ॥

### ८. कुट्टनाट्टुतिरुप्पुलियूरुदिव्यदेशः

देवीभावजुषा शठारिमुनिना सर्वात्मना स्वात्मनो
हृद्यो वल्लभ एष एव हि ममेत्यूरीकृतो यो हरिः ।

तेन श्रीपतिना शुभैर्गुणगणैर्युक्तेन जुष्टं स्थलं
श्रीमद्व्याघ्रपुराभिधं हृदि सदा विद्योतते मामके ॥

### ९. तिरुक्काट्करैदिव्यदेशः

तिरुकाट्करैनाम्नि दिव्यप्रदेशे विभान्तं शठारातियोगीन्द्रगीतम् ।
मुनीन्द्रस्य तस्यानुभूतौ महत्यां समुत्कण्ठितं देवदेवं स्तवानि ॥

### १०. तिरुक्कडित्तानदिव्यदेशः

तिरुक्कडित्तानसमाख्यदेशे शठारियोगीन्द्रमनःपुरे च ।
चकासतं श्रीपतिमप्रमेयप्रभावसिन्धुं परिकीर्तयेयम् ॥

### ११. तिरुमूलिक्कळदिव्यदेशः

तिरुमूलिक्कळनाम्ना प्रथिते शठवैरिकलिजितोस्स्तुत्ये ।
दिव्ये देशे विलसन् भगवानवतादिमं जनं कृपया ॥

### १२. तिरुनावाय् दिव्यदेशः

तिरुनावायिति कथिते शठजित्कलिजिन्मुनीन्द्रनुतविभवे ।
विलसन्तमनिशमीडे संसृतिसिन्धुप्लवाभिधानहरिम् ॥

### १३. तिरुवित्तुवक्कोडुदिव्यदेशः

उद्गीतं कुलशेखरेण कविनाऽनन्यार्हतामात्मनो
नानोदाहरणैः प्रकाशितवता भक्ताग्रगण्येन च ।
विद्वत्कोडपुरेश्वरं श्रितजनान् संसारवाराकरे
मग्नान्मादृश उद्धरन्तमनिशं संसेव्य धन्योऽभवम् ॥

॥ इति केरलमण्डलदिव्यदेशस्तुतिस्समाप्ता ॥

## अथ उदङ्मण्डलस्थदिव्यदेशस्तुतिः

### १. श्रीवेङ्कटाद्रिदिव्यदेशः

भक्तांघ्रिरेणुमुनिवजमशेषदिव्यसूरिस्तुतं महितमप्रतिमप्रभावम् ।
श्रीवेङ्कटाद्रिमधितिष्ठति भक्तभोग्ये श्रीश्रीनिवासभगवत्यहमस्मि भक्तः ॥

### २. शिङ्गवेळ्कुन्र (श्रीमदहोबिल) दिव्यदेशः

कलिद्विषा मुनीश्वरेण तत्ववादिना स्तुतं
रमासखेन मर्त्यसिंहमूर्तिनः निषेवितम् ।
वनेचरैर्मृगैर्जनैश्च नित्यसेवितं भजा-
म्यहोबिलाद्रिमद्वितीयवैभवोपशोभितम् ॥

### ३. अयोध्यादिव्यदेशः

याऽयोध्येत्यपराजितेति विदिता नाकं परेण स्थिता
सैषा राघवजानकीविहृतये भूमौ पुराऽवातरत् ।
तामेनां कुलशेखरेण कविना श्रीभट्टनाथेन च
प्रोद्गीतां हृदि चिन्तये रघुपतेर्विन्देय चानुग्रहम् ॥

### ४. नैमिशारण्यदिव्यदेशः

नैमिशारण्यनामांचिते पावने दिव्यकान्ताररूपेण भान्तं हरिम् ।
श्रीकलिद्विण्मुनिप्रेषितं वीक्षितु गच्छतोत्कण्ठिता भक्तितो भो जनाः ॥

### ५. सालग्रामदिव्यदेशः

नेपालारण्ये दुर्गमदेशे विलसन्तं सालग्रामं तीर्थपरीतं भज चित्त ।
भक्ताग्र्येण श्रीकलिहन्त्रा मुनिराजा हृष्टं जुष्टं शिष्टवरिष्ठैर्हतकष्टम् ॥

### ६. श्रीबदरिकाश्रमदिव्यदेशः

यत्राष्टाक्षरदिव्यमन्त्रमनघं नारायणस्सन् गुरुः
स्वस्मा एव नरात्मने समदिशच्छिष्याकृतिं भेजुषे ।
गौरीशोऽपि कपालमुक्तिमभजद्यत्रैव तत्र स्थितं
श्रीमद्भट्टकलिद्विडीड्यबदरीक्षेत्रे मदीयं मनः ॥

### ७. कण्डमेन्नुम् कडिनगरदिव्यदेशः

गङ्गा गङ्गेति वाचा सकलजनसमस्ताघसंहारकर्त्र्या
गङ्गाया दिव्यतीरे विलसति महिते गण्डनाम्ना प्रसिद्धे ।
क्षेत्रे श्रीभट्टनाथाह्वयमुनिविनुते भ्राजमानं महान्तं
विष्णुं जिष्णुं वरेण्यं रघुवरमनिशं ध्यायतां सम्पदस्स्युः ॥

### ८. पिरिदिदिव्यदेशः

बदर्याश्रमाध्वन्यतीवाभिरामे पिरिद्याह्वये दिव्यदेशे लसन्तम् ।
कलिध्वंसियोगीन्द्रगीतं नृसिंहं मुकुन्दं मुरारिं मुदा सेविषीय ॥

### ९. उत्तरमथुरादिव्यदेशः

शठरिपुभट्टनाथमुनितत्तनयाविनुतां यदुपतिवासुदेवजननस्थलमित्युदिताम् ।
अनिशमुपासिषीय मधुरां मथुरानगरीं रवितनयापगापरिवृतां दुरितौघहराम् ॥

### १०. द्वारकादिव्यदेशः

वासुदेवगृहमेकमुदन्वान् प्लावयत्यहह ! नेत्युपगीताम् ।
द्वारकामहमवैक्षिषि गोदातत्पितृस्तुतिसमेधितशोभाम् ॥

## ११ गोकुलप्रान्तस्थली

पूतनाशकटधेनुकवत्साद्यासुरप्रकृतिबृन्दनिहन्तुः ।
नन्दनन्दनविभोर्व्रजमीडे सर्वसूरिगणमानसजुष्टम् ॥
गोवर्धनोद्धरणरासविहारमुख्यैश्चर्याशतैरखिलभक्तमनोहरस्य ।
वृन्दावने विहरतो वसुदेवसूनोः कृष्णस्य दिव्यचरणौ शरणं ममैव ॥

## १२. क्षीराब्धिपरमपदस्तुतिः

अवतारकन्दमिति योगिभिर्नुतं कलशाम्बुराशिमनिशं विभावये ।
परमं पदं च चरमं स्थलं सतां शरणं, वृणोमि शरणं कदाचन ॥

## स्तुत्युपसंहारः

इति परवादिभीतिकरसूरिकुलाम्बुनिधौ
 सुकृतशतेन लब्धजननः कविताजनिभूः ।
शठरिपुमुख्यदिव्यकविवर्गनुतान् भगव-
 न्निलयवरान् स्तुवन् समभवत्सफलस्ववचाः ॥

काञ्चीवादिभयङ्करवंशीयाण्णङ्गरार्यसूरिकृता ।
अष्टोत्तरशतदिव्यक्षेत्रनुतिरसेयमिह जयत्वनिशम् ॥

॥ श्रीपराङ्कुशपरकालयतिवरवरमुनीन्द्रेभ्यो नमः ॥

अष्टोत्तरशतदिव्यदेशस्तुतिस्समाप्ता



# श्रीमलयालसद्गुरुसंस्तुतिः

## रचयिता — सुखवासि मल्लिकार्जुनः

श्रीमद्वेङ्कटपर्वतोपरितले "गोगर्भ" दीव्यद्गुहा-
सञ्जातासमनूत्नभास्करमिलासेव्यांघ्रिपद्मद्वयम् ।
मूर्तीभूततपःश्रियं स्तुतनयं निःसंशयं निर्भयम्
वन्दे श्रीमलयालसद्गुरुवरं निःसंसृतिं निर्मलम् ॥

प्राच्याद्वेदविदां वरं श्रितमनोऽभीष्टप्रदं पण्डितम्
संसाराम्बुधिमग्नतारकमहङ्काराहितिदूरात्मकम् ।
वन्द्यानामपि वन्दनीयमनघं शान्ताकृतिं सन्नुतम्
वन्दे श्रीमलयालसद्गुरुवरं व्यासाश्रमाधीश्वरम् ॥

ब्रह्मानन्दसमन्विताच्छवदनं सत्यक्षमाशालिनम्
कारुण्यैकनिधिं सुधीरहृदयं निर्दग्धकामासुरम् ।
निष्क्रोधञ्च विनष्टलोभमखलं निर्मोहनं निर्मदम्
निर्मात्सर्य "मसङ्ग" सद्गुरुवरं वन्दे सदा श्रेयसे ॥

चाञ्चल्योज्झितचित्तभक्तजनतासंस्तूयमानोल्लस-
न्माहात्म्यं कविकीर्त्यमानचरितं वैराग्यवारान्निधिम् ।
पीयूषोपमभाषितं कुवलयानन्दैकसन्धायकम्
वन्दे श्रीमलयालसद्गुरुवरं वन्दारुमन्दारकम् ॥

सौशील्याढ्यमनेकजन्मसुकृतैः सन्दर्शनीयं सताम्
क्रूराचारपरात्मसज्जनघटापञ्चाननं त्यागिनम् ।
सारासारविचारदक्षमनघं मेधाविनं योगिनम्
वन्दे श्रीमलयालसद्गुरुवरं गीर्वाणभाषाऽवनम् ॥



# पराभवोत्तरायणपरीक्षाकार्यक्रम:

## (MARCH 1967)

*The programme of the forth - coming examinations of the Samskrita Bhasha Prhcharini Sabha, Chittoor is tabled as follows :—*

| सशुल्कं आवेदनपत्राणां स्वीकरणस्य अन्तिमतिथि: Last date to receive applications with fees. | विलम्बशुल्केन (प्रतिपत्रं ५० पै) सह आवेदनपत्राणां स्वीकरणस्य अन्तिमतिथि: Last date to reccive applications witb penalty @ 50 Ps | परीक्षातिथय: Dates of Examina-tions |
|---|---|---|
| 20—1—1967 | 31—1—1967 | 4,5,6 MARCH '67 |

S. B. P. Sabha, Chittoor.
15—12—1966.

कीं० श्रीनिवासाचार्य:,
परीक्षामन्त्री – Parikshamanthrg.



## भारतसर्वकारेण प्रबुध्यताम्

गोवधनिषेधाय आसेतुहिमाचलं विज्ञापना: प्रतिक्षणं श्रूयन्ते, श्रीप्रभुदत्त-ब्रह्मचारी श्रीपूरीपीठाधिपश्शंकराचार्य: अनशनेन प्राणसंकटे वर्तेते,ज्योतिर्मठाधीशश्च तावनुसरति। एतादृशे विपत्कालेपि सर्वकार: अन्धतां बधिरतां मूकतां जडतां च प्रदर्शयति, पक्षरचनानायां विपक्षनिरासे एव आत्ममस्तिष्कमर्पयति। देशप्रजाहिते देशगौरवे देशसंस्कृतिसंरक्षणे वा अनुपयुक्तेन स्वातंत्र्येण किं वा प्रयोजनम्।

महात्मनामुपवासव्रतपरिक्लिष्टानां जीवद्दशायामेव सर्वकारस्य विवेक-मुत्पादयितुं गोपालबालं पुन:पुन: प्रार्थयते।

ति. कं. तिरुवेङ्कटाचार्य:,
प्रधानमन्त्री



# पराभवोत्तरायणपरीक्षाणां कालक्रमः

# TIME TABLE OF EXAMINATIONS MARCH 1967.

| परीक्षाः | 4—3—1967 | | 5—3—1967 | | 6—3—1967 | | विशेषांशाः |
|---|---|---|---|---|---|---|---|
| | 10 A. M. | 2 P. M. | 10 A. M. | 2 P. M. | 10 A. M. | 2 P. M. | |
| परिचयः | — | — | परिचयः | — | — | — | परिचयाऽभिज्ञप्रश्न-पत्राणां घंटाद्वयम्, इतरेषां घण्टात्रयं च कालः |
| अभिज्ञः | — | — | प्रथमपत्रम् | द्वितीयपत्रम् | — | -- | |
| विचक्षणः | -- | प्रथमं पत्रम् | द्वितीयं पत्रम् | तृतीयं पत्रम् | — | -- | |
| समर्थः | प्रथमखण्डे प्रथमंपत्रम् | प्रथमखण्डे द्वितीयं पत्रम् | द्वितीयखण्डे प्रथमं पत्रम् | द्वितीयखण्डे द्वितीयं पत्रम् | — | — | |
| कोविदः | प्रथमखण्डः | द्वितीयखण्डः | तृतीयखण्डः | चतुर्थखण्डः | पञ्चमखण्डः | — | |

चित्तूरु,
15—1—67.

की० श्रीनिवासाचार्यः,
परीक्षामन्त्री.

# प्रार्थना



संस्कृतरसिकाः, भारतीयाः,

गैर्वाणीयं पञ्चवर्षप्रभृति आर्थिकसंकटे महति वर्तमानेपि त्रैमासिकीत्वात् पुरस्सरीभूय मासिकीत्वमालम्ब्य यथासमयं निस्सरति, संस्कृतसेवां यथाशक्ति आचरतीति सुविदितमेव भवताम् ।

एतावत्पर्यन्तं भारतीयसर्वकारस्य यत्किञ्चिदनुदानं लब्धमासीत् येन अस्याः पाथेयं तत् प्राणरक्षणायालमासीत् । एतद्वर्षे संस्कृतपत्रिकाणां अनुदानविषये भरतवाक्यस्य श्रुतिसम्मेलनमाचरति भारतसर्वकारविद्याविभागः । तत्सूचनात्वेन तेन पत्रिकाप्रकाशनां हस्तं प्रापितः कश्चन लेखोपि ।

अतः संस्कृत्यभिमानिनः संस्कृताभिमानिन एव इतःपरं संस्कृतभाषां तत्पत्रिकाश्च पोषयेयुः, न प्रभुत्वमुखं पश्येयुः । अन्यथा भारतीयसंस्कृतेरेव विनाशः सद्यः सम्पद्येत ।

अतस्सहृदयाः,

व्यक्तिशः प्रार्थनायामशक्ति अस्माकं अनुमन्याय इमां प्रार्थनामङ्गीकृत्य स्वस्वविषयकमेव विभाव्य वार्षिकं चतूरूप्यकान्यूनं स्वच्छन्दं प्रेषयित्वा पोषयन्तु एतां लभन्तां च एतत्सेवाः यथापूर्वम् ।

इति प्रार्थयिता,

ति. कं. तिरुवेङ्कटाचार्यः,

प्रधानमन्त्री



आन्ध्रप्रदेशसर्वकारेणानुमोदिता R.C.No. 27-A 3/65 Dte 14—7—65.

R. N. 8145/60. Postal R. No. H. 493.

वार्षिकम् रू. ४-००



# प्रहेलिका:

ले० मा० शिवरामराजः, प्रोद्दटूरु.

चतुर्भुजः पञ्चममार्गगामी
भूत्वा ददर्श प्रथमात्मजाताम् ।
तृतीयमापूर्य पुरे द्वितीयं
विलंघ्य शीघ्रं नृपतिं समाप ॥

( अत्र लंकादाहः प्रस्तुतः पंचभूतानि । तत्तत्संख्यया निर्दिष्टानि )

अनिमेषोऽपि नो देवः वल्कवानपि नो फणी ।
तीर्थसेव्यपि नो भक्तः को सौ जानातु पण्डितः ॥

[मत्स्यः]

शिलावृक्षलताजाताः तिस्रस्सख्यो मुदा सदा ।
मुखद्वारे रमन्ते ताः का विजानातु पण्डितः ॥

[सुधा, पूगी, ताम्बूली]



Published by Sri N. Ramanatha Iyer, B. A., B. L., Advocate & Secretary, S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T. K. Thiruvengadacharya, at Vijaya Press, Chittoor, (A. P.) C. 1500